# ॥ बालरक्षा ॥

**गोप्य ऊचुः**

अव्यादजोऽंघ्रि मणिमांस्तव जांवथोरू
यज्ञोऽच्युतः कटितटं जठरं हयास्यः ।
हृत्केशवस्त्वदुर ईश इनस्तु कंठं
विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कं ॥ १ ॥

चक्र्यग्रतः सहगदो हरिरस्तु पश्चात्
त्वत्पार्श्वयोर्धनुरसी मधुहाजनश्च ।
कोणेषु शंख उरुगाय उपर्युपेंद्रः
तार्क्ष्यः क्षितौ हलधरः पुरुषः समंतात् ॥ २ ॥

इंद्रियाणि हृषीकेशः प्राणान्नारायणोऽवतु ।
श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु ॥ ३ ॥

पृश्निगर्भस्तु ते बुद्धिमात्मानं भगवांपरः ।
क्रीडंतं पातु गोविंदः शयानं पातु माधवः ॥ ४ ॥

व्रजंतमव्याद्वैकुंठ आसीनं त्वां श्रियः पतिः ।
भुंजानं यज्ञभुक्पातु सर्वग्रहभयंकरः ॥ ५ ॥

डाकिन्यो यातुधान्यश्च कुष्मांडा येऽर्भकग्रहाः ।
भूतप्रेतपिशाचाश्च यक्षरक्षोविनायकाः ॥ ६ ॥

कोटरा रेवती ज्येष्ठा पूतना मातृकादयः ।
उन्मादा ये ह्यपस्मारा देहप्राणेंद्रियद्रुहः ॥ ७ ॥

स्वप्नदृष्टा महोत्पाता वृद्धा बालग्रहाश्च ये ।
सर्वे नश्यंतु ते विष्णोर्नामग्रहणभीरवः ॥ ८ ॥

॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे षष्ठमेऽध्याये गोपीकृतबालरक्षा संपूर्णाः ॥